उत्तरप्रदेश शिक्षा-बोर्ड [illegible]कृत

# संस्कृत-प्रवेश:

(कक्षा ९ एवं १० के लिए)

सरन ब्रदर्स, पुस्तक प्रकाशक, आगरा

जयरामदासः

# सूचिका

प्रथमः पाठः

## वन्दना

(१)

वन्दे वन्दारु - मन्दार-
मिन्दु - भूषण - नन्दनम् ।
अमन्दानन्द - संदोह-
वन्धुरं सिन्धुराननम् ॥

(२)

या कुन्देन्दु-तुषार-हार-धवला
या शुभ्र - वस्त्रावृता ।
या वीणा-वर-दण्ड-मण्डित-करा
या श्वेत - पद्मासना ॥
या ब्रह्माच्युत-शङ्कर-प्रभृतिभिर्
देवैः सदा वन्दिता ।
सा मां पातु सरस्वती भगवती
निःशेष - जाड्यापहा ॥

### तृतीयः पाठः

# वैदिक-प्रार्थना

तेजोऽसि तेजो मयि धेहि ।
वीर्यमसि वीर्यं मयि धेहि ।
वलमसि वलं मयि धेहि ।
ओजोऽसि ओजो मयि धेहि ॥

असतो मा सद् गमय ।
तमसो मा ज्योतिर् गमय ।
मृत्योर् मामृतं गमय ॥

पश्येम शरदः शतम् ।
जीवेम शरदः शतम् ।
बुध्येम शरदः शतम् ।
अ-दीनाः स्याम शरदः शतम् ॥

गमय = ले जाओ । अमृतम् = अमरता । शरदः = वर्ष ।

तृतीय: पाठ:

# भारत-माता

विजयतां भारत-माता ! स-जला स-फला शस्य-श्यामला अस्या: भूमि: देवानाम् अपि मनांसि मोहयति । सिन्धु-ब्रह्मपुत्र-गङ्गा-गोदावरी-प्रभृतय: नद्य: स्वेन पावनेन जलेन सततम् एनाम् अभिषिञ्चन्ति । रत्नाकर: अस्या: चरणौ प्रक्षाल्य आत्मानं धन्यं मन्यते । गगन-चुम्बी हिमाचल: अस्या: शुभ्र: किरीट: इव विभाति । वहव: महा-पुरुषा अत्र जन्म गृहीत्वा इमां धन्याम् अकुर्वन । देवा: अपि अस्या: महिमानं गायन्ति । धन्या: खलु वयं ये अस्यां भूम्यां जन्म लब्धवन्त: ।

हे मात: ! यथा जन्म-दात्री जननी तथा त्वम् अपि वन्दनीया । रम्ये त्वदीये चरण-युगले अस्माकं चित्तं सदा रमताम् ।

व्यास-वाल्मीकि-कालिदास-समा: कवय:, राम-कृष्ण-बुद्ध-महावीर-गांधी-सदृशा: महात्मान:, अशोक-विक्रमादित्य-प्रताप-शिववीर-तुल्या: नृपतयश् च सदा त्वदीयम् अङ्कम् अलंकुर्वन्तु तव यश:-सुरभिं च भू-मण्डले सर्वत्र प्रसारयन्तु । सर्वेषाम् अस्माकं तव अनुग्रहेण तुष्टि: पुष्टिश् च भवताम् । अस्माकं सर्वे उद्योगा: जन-कल्याणाय भवन्तु । मात: ! भूय: भूय: त्वां वन्दामहे ।

जननी जन्मभूमिश्च स्वर्गादपि गरीयसी ।

## अभ्यास

१. भारतस्य भूमिः कीदृशी वर्तते ? २. काः नद्यः भारत-भूमिं सिञ्चन्ति ? ३. के महा-पुरुषाः भारत-भूमौ जन्म लब्धवन्तः।

## व्याकरण

(१) सन्धि कीजिये—तव + अनुग्रहेण । प्रक्षाल्य + आत्मानम् ।

(२) रूप लिखिये—देव के षष्ठी में । अस्मद् के प्रथमा में । भू धातु के वर्तमान (लट्) के अन्यपुरुष में ।

## अनुवाद

१. हिमालय शोभा देता है । २. बालक गाते हैं । ३. वर्षा होती है ।

अष्टमः पाठः

# मूर्ख-भक्त-कथा

लक्ष्मीपुरे घर्कटः नाम जटी अस्ति। तस्य मोढकः नाम शिष्यः अति-मूर्खः। स एकदा गुरुणा घृत-तैलानयनाय हट्टे प्रेषितः। तेन तदर्थम् एकम् एव धूपदहनं नाम पात्रं गृहीतम्। ततः कस्यचिद् वणिजः हट्टे मूल्यम् अर्पयित्वा तस्य एकस्मिन् पक्षे प्रथमं घृतं क्षेपितं, पुनः विपर्ययं कृत्वा द्वितीय-पक्षे तैलं क्षेपितम्। एवं मठ्याम् आगत्य गुरोः दर्शितम। कथितं च—मया घृत-तैले आनीते। गुरुणा उक्तम्—क्व ते ? तेन दर्शितम्—इदं तैलम्। गुरुणा उक्तम्—घृतं क्व ? शिष्येण पात्रस्य विपर्ययं कृत्वा दर्शितम्—इदं घृतम् इति। तावता तैलम् अपि भूमौ पपात। एवं द्वयम् अपि नष्टम्।

केचिज् जड़-धिय कार्ये पारम्पर्यं न जानते।
पात्र-पक्ष-द्वयात् क्षिप्ते घृत-तैले तपस्विना॥

जटी—जटाधारी साधु। धूपदहनं—धूप जलाने का पात्र-विशेष जिसमें दोनों ओर धूप जलाया जा सकता है।

## अभ्यास

१. मोढकः गुरुणा किमर्थं हट्टे प्रेषितः ? २. मोढकः किम् आदाय हट्टे गतः ? ३. तेन घृतं कुत्र क्षेपितम् ? ४. तैलं कुत्र क्षेपितम् ?

## व्याकरण

(१) संधि कीजिये—गुरुणा + उक्तम्। तस्य + एकस्मिन्।

(२) रूप लिखिए—गुरु के तृतीया में। तत् के षष्ठी में। अस् के वर्तमान (लट्) अन्यपुरुष में।

## अनुवाद

१ तेल गिरता है। २. गुरु देता है। ३. शिष्य मूर्ख है। ४. मैं पढ़ता हूं।

## पञ्चम प

# सुभाषितानि

गुणो भूषयते रूपं शीलं भूषयते कुलम् ।
सिद्धिर् भूषयते विद्यां भोगो भूषयते धनम् ॥१॥

विदेशेषु धनं विद्यां व्यसनेषु धनं मतिः ।
पर-लोके धनं धर्मः शीलं सर्वत्र वै धनम् ॥२॥

कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः स-विद्यानां कः परः प्रिय-वादिनाम् ॥३॥

ज्ञातिभिर् वण्टयते नैव चौरेणापि न नीयते ।
दाने नैव क्षयं याति विद्या-रत्नं महा-धनम् ॥४॥

उद्यमेन हि सिध्यन्ति कार्याणि, न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥५॥

सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयाद् एष धर्मः सनातनः ॥६॥

एकेन राज - हंसेन या शोभा सरसोऽभवत् ।
न सा बक - सहस्रेण परितस् तीर-वासिना ॥७॥

अस्ति यद्यपि सर्वत्र नीरं नीरज-मण्डितम् ।
रमते न मरालस्य मानसं मानसं विना ॥८॥

## अभ्यास

१. विदेशेषु धनं किम् ? २. विद्या महा-धनं कथं कथ्यते ? ३. मरालस्य मनः कुत्र रमते ? ४. नरः कीदृशं वचनं ब्रूयात् ?

## व्याकरण

(१) संधि-विच्छेद कीजिये—चौरेणापि । नानृतम् । यद्यपि ।

(२) रूप लिखिये—गुण और शील के प्रथमा में । यत् के द्वितीया में । भू के भूतकाल (लङ्) अन्यपुरुष में ।

## अनुवाद

१. सिंह आता है । २. शोभा होती है । ३. वृक्ष फलते हैं । ४. तू कहाँ है ?

षष्ठः पाठः

## कुविन्द-कथा

ततः कदाचित् द्वार-पालः प्रणम्य भोजं प्राह—राजन् ! द्रविड-देशात् कोऽपि लक्ष्मीधर-नामा कविः द्वारम् अध्यास्ते । इति । राजा 'प्रवेशय' इति प्राह । स च आगत्य तत्र राजानं 'स्वस्ति' इति उक्त्वा तदाज्ञया उपविष्टः प्राह—देव ! मया सकुटुम्बेन अत्र निवासाशया समागतम् । इति । ततो राजा मुख्यामात्यं प्राह—अस्मै गृहं दीयताम् । इति ।

ततः निखिलम् अपि नगरं विलोक्य कमपि मूर्खम् अमात्यः न अपश्यत् यं निरस्य विदुषे गृहं दीयेत । तत्र सर्वत्र भ्रमन् कस्यचित् कुविन्दस्य गृहं वीक्ष्य कुविन्दं प्राह—कुविन्द ! गृहात् निस्सर, तव गृहं विद्वान एष्यति इति ।

ततः कुविन्दः राज-भवनम् आसाद्य राजानं प्रणम्य प्राह—देव ! भवदमात्यः मां मूर्खं कृत्वा गृहात् निस्सारयति, पश्य त्वम् मूर्खः अहं पण्डितः वा इति—

काव्यं करोमि, न हि चारुतर करोमि ।<br>
यत्नात् करोमि यदि, चारुतरं करोमि ।<br>
भू-पाल - मौलि - मणि- मण्डित - पाद - पीठ।<br>
हे साहसाङ्क ! कवयामि वयामि यामि।।

ततः राजा 'साधु भोः कुविन्द !' इति उक्त्वा प्रत्यक्षरं लक्षं ददौ । 'मा भैषीः' इति पुनः कुविन्दं प्राह ।

## अभ्यास

१. मन्त्री कुविन्दं किम् अकथयत्? २. कुविन्दः नृपं किम् अकथयत्? ३. राजा किं प्रत्युक्तवान्? ४. कुविन्द के बनाये पद्य में क्या कोई विशेषता दीख पड़ती है? उसे स्पष्ट कीजिये।

## व्याकरण

(१) संधि कीजिये—इति + आह। इति + उक्त्वा।

(२) रूप लिखिये—देश के पंचमी में। किम के द्वितीया में। या के वर्तमान (लट्) उत्तमपुरुष में।

## अनुवाद

१. कवि कहता है। २. कुम्हार घर से निकला। ३. मैं जाता हूं। ४. तुम आते हो।

## व्याघ्र-चर्म-प्रतिच्छन्नः गर्दभः

कस्मिंश्चित् अधिष्ठाने शुद्धपटः नाम रजकः प्रतिवसति स्म। तस्य एकः गर्दभः अस्ति। स घासाभावात् अति-दुर्बलतां गत ।

अथ तेन रजकेन अटव्यां परिभ्रमता मृत-व्याघ्रः दृष्टः । चिन्तितं च—अहो ! शोभनम् आपतितम् । अनेन व्याघ्र-चर्मणा प्रतिच्छाद्य रासभं रात्रौ यव-क्षेत्रेषु उत्स्रक्ष्यामि । व्याघ्रं मत्वा समीप-र्वतिनः क्षेत्र-पालाः एनं न निष्कासयिष्यन्ति ।

तथानुष्ठिते रासभ रात्रौ यथेच्छं यव-भक्षणं करोति। प्रत्यूषे भूयोऽपि रजकः स्वाश्रयं नयति । एवं गच्छता कालेन स रासभा पीवर-तनुः जातः। बन्धन-स्थानम् अपि कृच्छ्रात् नीयते ।

अथ अन्यस्मिन् अहनि स मदोद्धतः दूरात् रासभ-शब्दम् अशृणोत् । तच्छ्रवण-मात्रेण एव स्वयं तार-स्वरेण शब्दयितुम् आरब्धः । अथ ते क्षेत्र-पालाः 'रसभः अयं व्याघ्र-चर्म-प्रतिच्छन्नः' इति ज्ञात्वां लकट-पाषाण-शर-प्रहारैः तं व्यापादितवन्त ।

### अभ्यास

१. राजकेन किं कृतम् ? २. क्षत्रपालैः गर्दभः कृतः न निष्कासितः ? ३. इस कथा से क्या शिक्षा मिलती है ?

### व्याकरण

(१) दीर्घ-संधि के चार उदाहरण लिखिये ।

(२) रूप लिखिये—किम् के सप्तमी में । रात्रि के सप्तमी में । वस् के वर्तमान उत्तमपुरुष में ।

### अनुवाद

१. धोबी कहाँ रहता है ? २. गधा मोटा हो गया । ३. बहुत अच्छा हुआ ।

# विचित्र-पद्यानि

## प्रहेलिकाः

अ-पदो दूर-गामी च, साक्षरो न च पण्डितः ।
अ-मुखः स्फुट-वक्ता च, यो जानाति स पण्डितः ॥१॥

सूची-मुखी न मार्जारी, द्वि-जिह्वा न च सर्पिणी ।
विद्वद्भिर् लालिता नित्यं, यो जानाति स पण्डितः ॥२॥

वृक्षाग्र - वासी, न विहंगमोऽयं
त्रि-नेत्र - धारी, न च शूल-पाणिः ।
त्वग्-वस्त्र - धारी, न मुनिर् न योगी
बिभर्ति तोयं, न घटो न मेघः ॥३॥

चक्री त्रिशूली, न शिवो न विष्णुर्
महा - बलिष्ठो, न च भीमसेनः ।
स्वच्छन्द - चारी, नृपतिर् न योगी
सीता - वियोगी, न च रामचन्द्रः ॥४॥

एको ना विंशतिः स्त्रीणां स्नानार्थं सरयूं गताः ।
विंशतिः पुनरायाता एको व्याघ्रेण भक्षितः ॥५॥

तातेन कथितं—पुत्र ! लिख लेखं ममाज्ञया ।
नतेन लिखितो लेखः पितुराज्ञा न लोपिता ॥६॥

अहं च त्वं च राजेन्द्र ! लोकनाथ उभावपि ।
बहु-व्रीहिरहं राजन् ! षष्ठीतत्पुरुषो भवान् ॥७॥

## उत्तर

(१) पत्रम् (२) लेखनी (३) नारिकेलम् (४) वृषः (सॉड) (५) एको ना विंशतिः १. एकेन ऊना विंशतिः २. एकः ना (=नरः) विंशतिः स्त्रीणां च (६) नतेन—१. न तेन २. नतेन (७) लोकनाथः—१. लोकः नाथः यस्य सः (अर्थात् लोक का दास) २. लोकस्य नाथः (लोक का स्वामी) ।

नवमः पाठः

# देवशर्म-कथा

अस्ति देवीकोट्ट-नाम्नि नगरे देवशर्मा नाम ब्राह्मणः। तेन विषुवत्-संक्रान्त्यां शक्तु-पूर्णः शरावः एकः प्राप्तः। तम् आदाय असौ कुम्भ-कारस्य भाण्ड-पूर्ण-मण्डपैकदेशे रौद्रेण आकुलितः अवस्थितः।

ततः शक्तु-रक्षार्थं हस्ते दण्डम् एकम् आदाय अचिन्तयत्—अहं शक्तु-शरावं विक्रीय दश कपर्दकान् प्राप्स्यामि। तदा अत्रैव तैः कपर्दकैः घट-शरावादिकम् उपक्रीय अनेकधा वृद्धैः तद्-धनैः पुनः पुनः पूग-वस्त्रादिकम् उपक्रीय विक्रीय लक्ष-संख्यानि धनानि कृत्वा विवाह-चतुष्टयं करिष्यामि। सपत्न्यः यदा द्वन्द्वं करिष्यन्ति तदा कोपाकुलोऽहं ताः लगुडेन ताडयिष्यामि।

इत्यभिधाय लगुडः क्षिप्तः। तेन शक्तु-शरावः चूर्णितः। भाण्डानि च बहूनि भग्नानि।

ततः तेन शब्देन आगतेन कुम्भकारेण तथा-विधानि भाण्डानि अवलोक्य ब्राह्मणः तिरस्कृतः मण्डपात् बहिष्कृतश् च।

## अभ्यास

१. देवशर्मा संक्रान्ति-दिने किं प्राप्तवान्? २. शक्तु-शरावः कथं चूर्णितः? ३. देवशर्मणा किं चिन्तितम्? ४. इस कथा से क्या शिक्षा मिलती है?

## व्याकरण

(१) संधि-विच्छेद कीजिये—वस्त्रादिकम् । कोपाकुलः । इत्यभिधाय ।

(२) रूप लिखिये—धन के तृतीया में । वहु के प्रथमा में । कृ के भविष्य (लृट्) अन्यपुरुष में ।

## अनुवाद

१. नगर में दो ब्राह्मण रहते हैं । २. हमने आज दो पाठ पढ़े । ३. तुम घर जाओ ।

दशमः पाठः

# बुद्धि-बलम्

पुरा प्रसेनजिन् नाम श्रावस्त्यमाभवन् नृपः ।
सभायामागतः कश्चिद् ब्राह्मणस् तं न्यवेदयत् ॥१॥

दुःखार्जितं धनं देव ! ह्यारितं त्वयि शास्तरि ।
वने नागवला-वल्ली- मूले विनिहितं मया ॥२॥

श्रुत्वेति राजा संचिन्त्य, वैद्यानाहूय सर्वशः ।
अपृच्छद् — आतुरेष्वद्य प्रयुक्तं किं किमौषधम् ? ॥३॥

इति पृष्टेषु वैद्येषु प्राहैको—वणिजो मया ।
दत्तो नागवला-क्वाथः, प्रमाणमधुना नृपः ॥४॥

तच् छ्रुत्वा स तमाहूय राजा वणिजमब्रवीत् ।
ननु नागवला केन तवानीतेति कथ्यताम् ॥५॥

देव ! कर्म-करेणेति तेनोक्ते वणिजा तदा ।
क्षिप्रमानाय्य राजासौ तं कर्म-करमभ्यधात् ॥६॥

त्वया नागवला-हेतोः खनतः शाखिनस् तलम् ।
दीनार-जातं यल्लब्धं ब्रह्म-स्वं तत् समर्पय ॥७॥

इत्युक्तो भू-भृता भीतः प्रतिपद्यैव तत्क्षणम् ।
स तानानीय दीनारांस् तत्र कर्म - करोऽददात् ॥८॥

इति राज्ञा स्व-बुद्ध्यैव ब्रह्म-स्वं हृतमाहृतम् ।
को हि नाम स संकल्पो धीमतां यो न सिध्यति ॥६॥

## अभ्यास

१. ब्राह्मणस्य धनं कुत्र आसीत् ? २. तस्मात् स्थानात् तत् केन हृतम् ? ३. राजा कर्मकरं किम् अकथयत् ? ४. बुद्धि-बल की महिमा पर पाँच पंक्तियाँ लिखिये ।

## व्याकरण

(१) संधि-विच्छेद कीजिये—दुःखार्जितम् । आतुरेष्वद्य । प्राहैकः । राजासौ ।

(२) रूप लिखिये—सभा के सप्तमी में । वन के तृतीया में । भू के भूतकाल (लङ्) उत्तमपुरुष में ।

## अनुवाद

१. राजा ने पूछा । २. कार्य सिद्ध होता है । ३. बालिका आवेगी ।

एकादशः पाठः

# गतानुगतिको लोकः

आसीद् धारा-नगर्यां कश्चित् परिव्राजकः। इतस्ततः भिक्षां कृत्वा तेन विपुलं धन संपादितम् । तत् सर्वं धनम् एकस्मिन् ताम्र-भाजने निक्षिप्य अरक्षत् ।

अथ कदाचित् मकर-संक्रान्तेः पर्व-कालः समायातः । पर्व-स्नानार्थं वहवः जनाः उज्जयिनीं प्रातिष्ठन्त। सोऽपि परिव्राजकः धन-पूर्णं ताम्र-भाजनं स्कन्धे निधाय तैः सह प्रस्थितः। रात्रिन्दिवं चलन्तः ते सिप्रा-तीरं प्राप्ताः। रात्रौ सर्वे तत्र विश्रान्ताः।

अथ प्रभाते शौच-स्नानि-कालं वीक्ष्य स स्व-ताम्र-भाजनस्य रक्षार्थं चिन्तितः अभवत् । ततः विचिन्त्य तेन सैकते सिप्रा-तटे सिकतासु गर्तं कृतम् । तदन्तः कलशं निधाय पुनः सिकताभिः पूरितम् । तस्य उपरि च वालुका-मयं शिव-लिङ्गं निर्माय बिल्व-पत्रैः पुष्पैश् च पूजितवान् । ततः शौचं स्नानं च कर्तुम् अगच्छत् ।

एतस्मिन् अन्तरे जन-मेलकः तां दिशां समायातः । तत्र वालुका-मयं शिव-लिङ्गं पूजितं दृष्ट्वा गतानुगतिकैः जनैः 'अत्र तीर्थे आगत्य अस्माभिः अति एवं वालुकामय शिव-लिङ्गं पूज-यितव्यम्' इति कृत्वा वहूनि शिव-लिङ्गानि तत्र निर्मितानि पूजितानि च ।

स्नानं कृत्वा प्रत्यागतः स परिव्राजकः सर्वं सिप्रा-तटं शिव-

लिङ्ग-मयम् अपश्यत्। क्व मम मुद्राभिः पूर्णं तत् ताम्र-भाजनम् इति विलपन् न निश्चेतुं अशक्नोत्। ततः परां निर्विण्णतां गतः असौ इमं श्लोकम् अपठत्—

गतानुगतिको लोको, न लोको पारमार्थिकः।
वालुका-लिङ्ग-मात्रेण, गतं मे ताम्र-भाजनम् ॥

## अभ्यास

१. ताम्र-भाजनस्य रक्षार्थं परिव्राजकः कम् उपायम् अकरोत् ? २. जनैः शिव-लिङ्गानि कुतः पूजितानि ? ३. प्रत्यागतः परिव्राजकः नदी-तीरे किम् अपश्यत् ?

## व्याकरण

(१) संधि कीजिये—तस्य + उपरि। अप + एवम्।

(२) रूप लिखिये—नगरी के सप्तमी में। रक्षा के चतुर्थी में। पठ् और अस् के भूतकाल (लङ्) उत्तमपुरुष में।

## अनुवाद

१. तुम पाठ को पढ़ो। २. हम घर जावें। ३. ईश्वर रक्षा करे।

द्वादशः पाठः

# जयचन्द्र-प्रबन्धः

पृथ्वीराजे दिवंगते श्रीजयचन्द्रेण वर्द्धापनकानि आरब्धानि। गृहे-गृहे घृतेन उदुम्बर-क्षालनम् आरब्धम्। तूर्य-रवः प्रवृत्तः। मन्त्री राज-कुले न याति। केनापि उक्तम्—देव! पृथ्वीराज-मरणं मन्त्रिणः विचारे न आयातम्। चतुर्थ-दिने मन्त्री राज-कुलं प्राप्तः। राज्ञा उक्तम्—मन्त्रिन्! चिराद् दृष्टः असि।

'देव! राज-कार्य-व्यग्रतया न आयातं मया। देव! का इयं खडखडा?'

राज्ञा उक्तम्—किं न वेत्सि पृथ्वीराज-मरणम्? एवं-विधे वैरिणि मृते वर्द्धापनकानि किं न विधीयन्ते?

मन्त्रिणा उक्तम्—तस्मिन् हते विषादः कर्तुं युज्यते हर्षः वा?

राज्ञा उक्तम्—कथम्?

'देव! प्रतोली भवति। तस्याम् अयोमयानि कपाटानि। अर्गला च अयोमयी। यदा सा भज्यते कपाटौ च पृथक् भवतः, तदा दुर्गस्य किं स्यात्? तथा देव! स पृथ्वीराजः तव अर्गला-समः आसीत्। तस्मिन् विनष्टे गृह-सूत्रं कर्तुं युक्तं, वर्धापनकं वा? तिष्ठतु वर्द्धापनकम्। देव! यद् अद्य पृथ्वीराजस्य तत् कल्ये आत्मनः ज्ञेयम्।'

## अभ्यास

१. पृथ्वीराजः कः आसीत् ? २. जयचन्द्रः कः आसीत् ? ३. जयचन्द्रेण वर्द्धापनकानि कुतः कृतानि ? ४. मन्त्रिणा किं कथितम् ? ५. इस प्रबन्ध से क्या शिक्षा मिलती है ?

## व्याकरण

(१) संधि कीजिये---राज्ञा + उक्तम् । का + इयम् ।

(२) रूप लिखिये---युष्मद् के षष्ठी में । कृ के भूतकाल अन्य-पुरुष में ।

## अनुवाद

१. महाराज ! यह क्या खड़बड़ है ? २. जब अर्गला टूट जाती है तो दुर्ग विध्वस्त हो जाता है । ३. आज मेरी तो कल तुम्हारी ।

त्रयोदशः पाठः

# पितृ-भक्तः धर्म-व्याधः

पिता-माता च भगवन् ! एतौ मे दैवतं परम् ।
यद् दैवतेभ्यः कर्तव्यं तदेताभ्यां करोम्यहम् ॥१॥
त्रयस्त्रिंशद् यथा देवाः सर्वे शक्र - पुरोगमाः ।
संपूज्याः सर्व - लोकस्य तथा वृद्धाविमौ मम ॥२॥
एतौ पुष्पैः फलैरन्नैस् तोषयामि सदा द्विज !
यज्ञा वेदाश् च चत्वारः सर्वमेतौ मम द्विज ! ॥३॥
एतदर्थं मम प्राणाः भार्या पुत्रः सुहृज्जनः ।
स-पुत्र-दारः शुश्रूषां नित्यमेव करोम्यहम् ॥४॥
स्वयं च स्नापयाम्येतौ तथा पादौ प्रधावये ।
आहारं च प्रयच्छामि स्वयं च द्विज-सत्तम् ! ॥५॥
अनुकूलं तथा वच्मि विप्रियं परिवर्जये ।
अतन्द्रितः सदा विप्र ! शुश्रूषां वै करोम्यहम् ॥६॥

## अभ्यास

१. पुत्रस्य पितरौ प्रति किं कर्तव्यम् ? २. धर्मव्याधः पित्रोः शुश्रूषां कथम् अकरोत ? ३. धर्म-व्याध की कथा लिखिये ।

## व्याकरण

(१) संधि-विच्छेद कीजिये—करोम्यहम् । वृद्धाविमौ ।
(२) इस पाठ में आये हुए सर्वनामों को चुनिये ।

## अनुवाद

१. माता-पिता देवताओं के तुल्य हैं । २. सदा उनकी आज्ञा का पालन करना चाहिए । ३. मधुर वचनों से उन्हें सन्तुष्ट करो ।

चतुर्दशः पाठः

# वनराज-प्रबन्धः

तस्य कान्यकुब्जस्य एक-देशः गूर्जर-धरित्री। तस्यां गूर्जर-धरित्र्यां पञ्चाशर-ग्रामे चापोत्कट-वंश्यं वालकं झोलिका-सस्थं वृक्षे निधाय तन्माता इन्धनम् अवचिनोति। प्रस्तावात् तत्रायातैः जैनाचार्यैः श्रीशीलगुणसूरिभिः पुण्य-प्रभावः अयम् इति विमृश्य वृत्ति-दान-पूर्वं तन्मातुः पार्श्वात् जगृहे। गुरुभिः दत्त-वनराजाभिधानः अष्ट-वार्षिकः देव-पूजा-विनाश-कारिणां मूषकाणां रक्षाधिकारे नियुक्तः। स तान् बाणेन निघ्नन् गुरुभिः निषिद्धः अपि चतुर्थोपाय-साध्यान् एव तान् जगौ। तस्य जातके राज-योगम् अवधार्य स तन्मातुः पुनः प्रत्यर्पितः। ततः चौर-वृत्त्या वर्तमानः सर्वत्र धाटी-प्रपातम् अकरोत्।

कदाचित् काकर-ग्रामे खात्र-पातन-पूर्वं कस्यापि व्यवहारिणः गृहे धनं मुष्णतः तस्य करः मञ्जूषान्तः दधि-भाण्डे पतितः। भुक्तः अहम् इति विचिन्त्य तत् सर्वं तत्रैव मुक्त्वा विनिर्ययौ। प्रातः तत्पत्न्या श्रीदेव्या पञ्चाङ्गुलि-प्रतिबिम्बं दध्नि वीक्ष्य कुलीनः कोऽपि चौरः अयम् इति कृत्वा सहोदर-वात्सल्यात् आहूतः। सप्तमे दिने समेत्य तां भगिनीम् इति नमश्चक्रे। मम पट्टाभिषेके भवत्या एव भगिन्या तिलकं विधेयम् इति च प्रतिपदे।

अथ अन्यस्मिन् अवसरे तेन चरट-वृत्त्या वर्तमानेन क्वापि अरण्य-प्रदेशे जाम्बाभिधानो वणिक् अवरुद्धः। स तान् दृष्ट्वा

स्व-बाण-पञ्चक-मध्याद् बाण-द्वयं बभञ्ज । ततः पृष्टः सन् स प्राह—यूयं त्रयः अतः त्रयाधिकं बाण-द्वयं विफलम् । ततः परितुष्टेन वनराजेन मम पट्टाभिषेके त्वं महामात्यः भावी इति आदिश्य विसृष्टः ।

वनराज = राजस्थान में सर्वप्रथम गूजर-राज्य का संस्थापक चावड़ा-वंशीय राजा । झोलिका = झोली । चतुर्थोपाय = दण्ड । (अन्य तीन उपाय—साम, दाम, भेद ) । धाटी-प्रपातम् = धाड़े मारना, डाके डालना । खात्र-पातन पूर्वम् = सेंध मारकर । व्यवहारिम् = महाजन । चरट = लुटेरा ।

## अभ्यास

१. वनराजः कः आसीत् ? २. गुरुः तं केन कारणेन मातुः प्रत्यर्पितवान् ? ३. व्यावहारिणः गृहे सर्वं तथैव मुक्त्वा स कुतः विनिर्यातः ? ४. वनराज की कथा को अपने शब्दों में लिखिये ।

## व्याकरण

(१) यण्-संधि कब होती है ? इसके चार उदाहरण दीजिये ।

(२) अस्मद् शब्द के पूरे रूप लिखिये ।

(३) भू, गम्, प्रच्छ् और पा के भविष्य (लृट्) अन्यपुरुष के रूप लिखिये ।

## अनुवाद

१. वनराज वीर और निर्भीक था । २. उसका हाथ दही के भांड में जा पड़ा । ३. मैंने इसके घर भोजन कर लिया, यह सोचकर उसने समस्त धन वहीं छोड़ दिया ।

पञ्चदशः पाठः

# सीतायाः वन-गमनाग्रहः

(१)

तामाह राघवः प्रीतः स्व-प्रियां प्रिय-वादिनीम् ।
कथं वनं तु नेष्येऽहं वहु - व्याघ्र - मृगाकुलम् ॥१॥
राक्षसा घोर-रूपाश् च सन्ति मानुष - भोजिनः ।
सिंह-व्याघ्र-वाराहाश् च संचरन्ति समन्ततः ॥२॥
कट्वम्ल - फल - मूलानि भोजनार्थं सु - मध्यमे !
अपूपानि व्यञ्जनानि विद्यन्ते न कदाचन ॥३॥
काले काले फलं वापि विद्यते कुत्र सुन्दरि !
मार्गो न दृश्यते क्वापि शर्करा - कण्टकान्वितः ॥४॥
गुहा - गह्वर - संवाधं झिल्ली-दंशादिभिर् युतम् ।
एवं वहु - विधं दोषं वनं दण्डक - संज्ञितम् ॥५॥

(२)

रामस्य वचनं श्रुत्वा सीता दुःख - समन्विता ।
प्रत्युवाच स्फुरद्-वक्त्रा किंचित् - कोप-समन्विता ॥६॥
कथं मामिच्छसे त्यक्तुं धर्म - पत्नीं पति-व्रताम् ।
त्वत्-समीप-स्थितां राम ! को वा मां धर्षयेद् वने ? ॥७॥

फल - मूलादिकं यद्यत् तव भुक्तावशेषितम् ।
तदेवामृत - तुल्यं मे तेन तुष्टा रमाम्यहम् ॥८॥
त्वया सह चरन्त्या मे कुशाः काशाश् च कण्टकाः ।
पुष्पास्तरण - तुल्यास्‌ मे भविष्यन्ति न संशयः ॥९॥
अहं त्वां क्लेशये नैव भवेयं कार्य - साधिका ।
यदि गच्छसि मां त्यक्त्वा प्राणांस् त्यक्ष्यामि तेऽग्रतः ॥१०॥
इति तं निश्चयं ज्ञात्वा सीताया रघु - नन्दनः ।
अब्रवीद्-देवि ! गच्छत्वं वनं शीघ्रं मया सह ॥११॥
अरुन्धत्यै प्रयच्छाशु हारानाभरणानि च ।
ब्राह्मणेभ्यो धनं सर्वं दत्त्वा गच्छामहे वनम् ॥१२॥

## अभ्यास

१. रामः सीतायै किम् अकथयत् ? २. सीताय किं प्रयुक्तम् ?
३. इस पाठ के आधार पर वन का वर्णन करो ।

## व्याकरण

(१) संधि-विच्छेद कीजिये—प्रयच्छाशु । मृगाकुलम् । रमाम्यहम् ।
कट्वम्ल ।

(२) रूप लिखिये—चरन्ती के षष्ठी में । गम् के भूत और भविष्य उत्तमपुरुष में ।

## अनुवाद

१. वन अनेक कष्टों से परिपूर्ण है । २. फल भी कभी मिलते हैं और कभी नहीं । ३. वे ही मेरे लिए अमृत-तुल्य होंगे ।

षोडशः पाठः

# आत्म-त्यागी मध्यमः

(ततः प्रविशति सुत-त्रयेण कलत्रेण च परिवृतः
ब्राह्मणः पृष्ठतः घटोत्कचश् च)

घटोत्कचः—भोः ब्राह्मण ! तिष्ठ, तिष्ठ ।

ब्राह्मणः—भोः ! कः नु खलु एषः ?

ब्राह्मणी—आर्य कः एषः अस्मान् संतापयति ?

घटोत्कचः—भोः ब्राह्मण ! तिष्ठ, तिष्ठ, न गम्यतां, न गम्यताम् ।

ब्राह्मणः—किं करिष्यामि मन्द-भाग्यः ?

ब्राह्मणी—ननु विक्रोशामः ?

प्रथमः पुत्रः—भवति ! कस्य वयं विक्रोशामः ?

ब्राह्मणः—ब्राह्मणि ! न भेतव्यं, न भेतव्यम् । शङ्के नाति-दूरः पाण्डवानाम् आश्रमः ।

प्रथमः—भोः तात ! न तत्र पाण्डवाः इति मन्ये ।

ब्राह्मणः—कथं त्व जानीषे !

प्रथमः—श्रुतं मया केनचित् ब्राह्मणेन, यज्ञम् अनुभवितुं महर्षेः धौम्यस्य आश्रमं गताः इति ।

ब्राह्मणः—हंत ! निराशाः स्मः । व्यपाश्रयिष्ये तावत् एनम् ।

(२)

ब्राह्मणः—(घटोत्कचं प्रति) भोः भोः पुरुष ! अस्ति अस्माकं मोक्षः ?

घटोत्कचः—मोक्षः अस्ति समयतः।

ब्राह्मणः—कः समयः?

घटोत्कचः—अस्ति मे तत्रभवती जननी। तया अहम् आज्ञप्तः—पुत्र! मम उपवास-निसर्गार्थं कश्चिद् मानुषः प्रतिगृह्य आनेतव्यः। तत् पुत्रम् एकं विसर्जय।

ब्राह्मणः—हहो! राक्षसाधम! किम् अहम् अब्राह्मणः?

ब्राह्मणी—आर्य! गृहीत-फलेन एतेन शरीरेण कुलं रक्षितुम् इच्छामि।

घटोत्कचः—भवति! न खलु स्त्री-जनः अभिमतः तत्रभवत्याः।

ब्राह्मणः—अहम् अनुगमिष्यामि भवन्तम्।

घटोत्कचः—आः! वृद्धः त्वम्। अपसर।

प्रथमः पुत्रः—आपदं हि पिता प्राप्तो ज्येष्ठ-पुत्रेण तार्यते।
ततोऽहमेव यास्यामि गुरूणां प्राण-रक्षणात्॥

ब्राह्मणः—ज्येष्ठम् इष्टतमं न शक्नोमि परित्यक्तुम्।

ब्राह्मणी—तथा अहम् अपि कनिष्ठम् इच्छामि।

मध्यमः पुत्रः—पित्रोः अनिष्टं कस्य इदानीं प्रियम्? अहम् आगच्छामि।

घटोत्कचः—अहं प्रीतः अस्मि। शीघ्रम् आगच्छ।

मध्यमः—धन्योऽस्मि यद् गुरु-प्राणाः स्वैः प्राणैः परिरक्षिताः।

घटोत्कचः—अहो स्वजन-वात्सल्यम् अस्य ब्राह्मण-वटोः!

(३)

मध्यमः—भोः तातः! अभिवादये।

ब्राह्मणः—एहि, एहि पुत्र! ब्रह्म-लोकम् अवाप्नुहि।

मध्यमः—अनुगृहीतः अस्मि । अम्ब ! अभिवादये ।

ब्राह्मणी—जात ! चिरंजीव ।

मध्यमः—अनुगृहीतः अस्मि । आर्य ! अभिवादये ।

प्रथमः—एहि, एहि वत्स ! परिष्वजस्व गाढं माम् ।

मध्यमः—अनुगृहीतः अस्मि ।

तृतीयः—आर्य ! अभिवादये ।

मध्यमः—स्वस्ति ।

तृतीयः—अनुगृहीतः अस्मि ।

घटोत्कचः—अतिक्रामति मातुः आहार-कालः ! शीघ्रं गच्छ ।

मध्यमः—भोः तात ! एष गच्छामि ।

(घटोत्कचेन सह निष्क्रान्तः)

ब्राह्मणः—हा ! हा ! परिमुषिताः स्मः । हा पुत्रक ! कथं गतः एव ?

## अभ्यास

१. घटोत्कचः कः आसीत् ? २. माता घटोत्कचं किम् आज्ञापयत् ? ३. घटोत्कचः ब्राह्मणाय किं अकथयत् ? ४. ज्येष्ठ-पुत्रेण किं कथितम् ? ५. मध्यम-पुत्रेण किं कथितम् ? ६. इस पाठ से क्या शिक्षा मिलती है ?

## व्याकरण

(१) गुण-संधि के चार उदाहरण लिखिये ।

(२) नीचे लिखे रूपों के वचन और विभक्ति बताइये—वनानि, सभाः, गृहाभ्याम् ।

## अनुवाद

१. मैं उपवास करूंगा । २. तुम किसको चाहते हो ? ३. वह धन्य है । ४. वहाँ कब जाओगे ?

सप्तदशः पाठः

# मङ्गलम्

(१)

कालें वर्षंतु पर्जन्या
पृथिवी शस्य - शालिनी ।
देशोऽयं क्षोभ - रहितः
ब्राह्मणाः सन्तु निर्भयाः ॥

(२)

सर्वे च सुखिनः सन्तु ।
सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु
मा कश्चिद् दुःख-भाग् भवेत् ॥

# व्याकरण

## १. संधि

कभी-कभी दो वर्ण पास आने पर मिल जाते हैं। मेल के समय कभी पूर्व वर्ण में विकार होता है, कभी उत्तर वर्ण में; और कभी दोनों में। इस मेल को संधि कहते हैं।

### उदाहरण

| | |
|---|---|
| राम + अनुजः | = राम् + अ + अ + नुजः |
| | = राम् + आ + नुजः = रामानुजः |
| यदि + अपि | = यद् + इ + अ + पि |
| | = यद् + य् + अ + पि |
| | = यद् + य + पि = यद्यपि |
| तद् + हितम् | = त + द् + ह् + इतम् |
| | = त + द् + ध् + इतम् |
| | = त + द्ध् + इतम् = तद्धितम् |

### (१) दीर्घ संधि

जब ह्रस्व या दीर्घ अ, इ, उ या ऋ के आगे सवर्ण स्वर आता है तो दोनों के स्थान पर दीर्घ स्वर हो जाता है। अर्थात् अ या आ के आगे अ या आ आता है तो दोनों का आ हो जाता है; इ या ई के आगे इ या ई आता है तो दोनों का ई हो जाता है; उ या ऊ के आगे उ या ऊ आता है तो दोनों का ऊ हो जाता है; और ऋ या ॠ के आगे ऋ या ॠ आता है तो दोनों का ॠ हो जाता है।

### उदाहरण

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| अ | + | अ | = | आ | ज्ञान | + | अर्थी | = ज्ञानार्थी |
| आ | + | अ | = | आ | विद्या | + | अर्थी | = विद्यार्थी |
| अ | + | आ | = | आ | देव | + | आलयः | = देवालयः |
| आ | + | आ | = | आ | विद्या | + | आलयः | = विद्यालयः |

| इ | + | इ | = | ई | क्षिति | + | इन्द्रः | = क्षितीन्द्र |
|---|---|---|---|---|---|---|---|---|
| ई | + | इ | = | ई | मही | + | इन्द्रः | = महीन्द्रः |
| इ | + | ई | = | ई | क्षिति | + | ईशः | = क्षितीशः |
| ई | + | ई | = | ई | मही | + | ईशः | = महीशः |
| उ | + | उ | = | ऊ | मधु | + | उत्सवः | = मधूत्सवः |
| ऊ | + | उ | = | ऊ | वधू | + | उत्सवः | = वधूत्सवः |
| उ | + | ऊ | = | ऊ | मधु | + | ऊर्मिः | = मधूर्मिः |
| ऊ | + | ऊ | = | ऊ | वधू | + | ऊर्मिः | = वधूर्मिः |
| ऋ | + | ऋ | = | ॠ | पितृ | + | ऋणम् | = पितॄणम |

## (२) गुण संधि

जब ह्रस्व या दीर्घ अ के आगे ह्रस्व या दीर्घ इ या उ या ऋ आता है तो दोनों के स्थान में क्रम से ए या ओ या अर् हो जाता है।

अर्थात् अ या आ के आगे इ या ई आता है तो दोनों का ए हो जाता है; उ या ऊ आता है तो दोनों का ओ हो जाता है; और ऋ या ऋ आता है तो अर् हो जाता है।

### उदाहरण

| अ | + | इ | = | ए | नर | + | इन्द्रः | = नरेन्द्रः |
|---|---|---|---|---|---|---|---|---|
| आ | + | इ | = | ए | महा | + | इन्द्रः | = महेन्द्रः |
| अ | + | ई | = | ए | नर | + | ईशः | = नरेशः |
| आ | + | ई | = | ए | महा | + | ईशः | = महेशः |
| अ | + | उ | = | ओ | जल | + | उत्सवः | = जलोत्सवः |
| आ | + | उ | = | ओ | महा | + | उत्सवः | = महोत्सवः |
| अ | + | ऊ | = | ओ | जल | + | ऊर्मिः | = जलोर्मिः |
| आ | + | ऊ | = | ओ | महा | + | ऊर्मिः | = महोर्मिः |
| अ | + | ऋ | = | अर् | देव | + | ऋषिः | = देवर्षिः |
| आ | + | ऋ | = | अर् | महा | + | ऋषिः | = महर्षिः |

## (३) वृद्धि संधि

जब ह्रस्व या दीर्घ अ के आगे ए-ऐ या ओ-औ आता है तो दोनों के स्थान पर क्रम से ऐ या औ हो जाता है।

अर्थात् अ या आ के आगे ए या ऐ आता है तो दोनों का ऐ हो जाता है; और अ या आ के आगे ओ या औ आता है तो दोनों का औ हो जाता है।

### उदाहरण

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| अ | + | ए | = | ऐ | तव | + | एव | = | तवैव |
| आ | + | ए | = | ऐ | तथा | + | एव | = | तथैव |
| अ | + | ऐ | = | ऐ | मत | + | ऐक्यम् | = | मतैक्यम् |
| आ | + | ऐ | = | ऐ | तथा | + | ऐक्यम् | = | तथैक्यम् |
| अ | + | ओ | = | औ | जल | + | ओघः | = | जलौघः |
| आ | + | ओ | = | औ | महा | + | ओघः | = | महौघः |
| अ | + | औ | = | औ | जल | + | औषधम् | = | जलौषधम् |
| आ | + | औ | = | औ | महा | + | औषधम् | = | महौषधम् |

## (४) यण् संधि

जब इ-ई, उ-ऊ या ऋ के आगे असमान अर्थात् असवर्ण स्वर आता है, तो इ-ई, का य्, उ-ऊ का व् और ऋ का र् हो जाता है।

### उदाहरण

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| इ | + | अ | = | य | यदि | + | अपि | = | यद्यपि |
| ई | + | आ | = | या | नदी | + | आदयः | = | नद्यादयः |
| इ | + | ए | = | ये | प्रति | + | एकः | = | प्रत्येकः |
| उ | + | आ | = | वा | सु | + | आगतम् | = | स्वागतम् |
| उ | + | इ | = | वि | भवतु | + | इति | = | भवत्विति |
| ऊ | + | ऐ | = | वै | वधू | + | ऐक्यम् | = | वध्वैक्यम् |
| ऋ | + | आ | = | रा | पितृ | + | आदेशः | = | पित्रादेशः |

## (५) अयादि संधि

जब ए, ऐ, ओ या औ के आगे स्वर आता है तो ए का अय्, ऐ का आय्, ओ का अव् और औ का आव् हो जाता है।

उदाहरण

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| ए | + | अ | = | अय् | ने | + | अनम् | = | नयनम् |
| ऐ | + | अ | = | आय् | नै | + | अकः | = | नायकः |
| ओ | + | अ | = | अव् | पो | + | अनम् | = | पवनम् |
| औ | + | अ | = | आव् | पौ | + | अकः | = | पावकः |
| औ | + | अ | = | आव् | गुरौ | + | अपि | = | गुरावपि |

## २. शब्द-रूप

### (क) नरजातीय (पुंलिङ्ग)

#### (१) अकारान्त राम शब्द

| | | | |
|---|---|---|---|
| प्रथमा | रामः | रामौ | रामाः |
| संबोधन | हे राम | रामौ | रामाः |
| द्वितीया | रामम् | रामौ | रामान् |
| तृतीया | रामेण | रामाभ्याम् | रामैः |
| चतुर्थी | रामाय | रामाभ्याम् | रामेभ्यः |
| पञ्चमी | रामात् | रामाभ्याम् | रामेभ्यः |
| षष्ठी | रामस्य | रामयोः | रामाणाम् |
| सप्तमी | रामे | रामयोः | रामेषु |

#### (२) इकारान्त हरि शब्द

| | | | |
|---|---|---|---|
| प्रथमा | हरिः | हरी | हरयः |
| संबोधन | हरे | हरी | हरयः |
| द्वितीया | हरिम् | हरी | हरीन् |
| तृतीया | हरिणा | हरिभ्याम् | हरिभिः |
| चतुर्थी | हरये | हरिभ्याम् | हरिभ्यः |
| पञ्चमी | हरेः | हरिभ्याम् | हरिभ्यः |
| षष्ठी | हरेः | हर्योः | हरीणाम् |
| सप्तमी | हरौ | हर्योः | हरिषु |

### (३) उकारान्त गुरु शब्द

| | | | |
|---|---|---|---|
| प्रथमा | गुरुः | गुरू | गुरवः |
| संबोधन | गुरो | गुरू | गुरवः |
| द्वितीया | गुरुम् | गुरू | गुरून् |
| तृतीया | गुरुणा | गुरुभ्याम् | गुरुभिः |
| चतुर्थी | गुरवे | गुरुभ्याम् | गुरुभ्यः |
| पञ्चमी | गुरोः | गुरुभ्याम् | गुरुभ्यः |
| षष्ठी | गुरोः | गुर्वोः | गुरूणाम् |
| सप्तमी | गुरौ | गुर्वोः | गुरुषु |

## (ख) नान्यतरजातीय (नपुंसकलिङ्ग)

### (४) अकारान्त गृह शब्द

| | | | |
|---|---|---|---|
| प्रथमा | गृहम् | गृहे | गृहाणि |
| संबोधन | गृह | गृहे | गृहाणि |
| द्वितीया | गृहम् | गृहे | गृहाणि |
| तृतीया | गृहेण | गृहाभ्याम् | गृहैः |
| चतुर्थी | गृहाय | गृहाभ्याम् | गृहेभ्यः |
| पञ्चमी | गृहात् | गृहाभ्याम् | गृहेभ्यः |
| षष्ठी | गृहस्य | गृहयोः | गृहाणाम् |
| सप्तमी | गृहे | गृहयोः | गृहेषु |

### (५) इकारान्त वारि शब्द

| | | | |
|---|---|---|---|
| प्रथमा | वारि | वारिणी | वारीणि |
| संबोधन | वारि, वारे | वारिणी | वारीणि |
| द्वितीया | वारि | वारिणी | वारीणि |
| तृतीया | वारिणा | वारिभ्याम् | वारिभिः |
| चतुर्थी | वारिणे | वारिभ्याम् | वारिभ्यः |
| पञ्चमी | वारिणः | वारिभ्याम् | वारिभ्यः |
| षष्ठी | वारिणः | वारिणोः | वारीणाम् |
| सप्तमी | वारिणि | वारिणोः | वारिषु |

## (६) उकारान्त मधु शब्द

| | | | |
|---|---|---|---|
| प्रथमा | मधु | मधुनी | मधूनि |
| संबोधन | मधु, मधो | मधुनी | मधूनि |
| द्वितीया | मधु | मधुनी | मधूनि |
| तृतीया | मधुना | मधुभ्याम् | मधुभिः |
| चतुर्थी | मधुने | मधुभ्याम् | मधुभ्यः |
| पञ्चमी | मधुनः | मधुभ्याम् | मधुभ्यः |
| षष्ठी | मधुनः | मधुनोः | मधूनाम् |
| सप्तमी | मधुनि | मधुनोः | मधुषु |

## (ग) नारीजातीय (स्त्रीलिङ्ग)

## (७) अकारान्त रमा शब्द

| | | | |
|---|---|---|---|
| प्रथमा | रमा | रमे | रमाः |
| संबोधन | रमे | रमे | रमाः |
| द्वितीया | रमाम् | रमे | रमाः |
| तृतीया | रमया | रमाभ्याम् | रमाभिः |
| चतुर्थी | रमायै | रमाभ्याम् | रमाभ्यः |
| पञ्चमी | रमायाः | रमाभ्याम् | रमाभ्यः |
| षष्ठी | रमायाः | रमयोः | रमाणाम् |
| सप्तमी | रमायाम् | रमयोः | रमासु |

## (८) ईकारान्त नदी शब्द

| | | | |
|---|---|---|---|
| प्रथमा | नदी | नद्यौ | नद्यः |
| संबोधन | नदि | नद्यौ | नद्यः |
| द्वितीया | नदीम् | नद्यौ | नदीः |
| तृतीया | नद्या | नदीभ्याम् | नदीभिः |
| चतुर्थी | नद्यै | नदीभ्याम् | नदीभ्यः |
| पञ्चमी | नद्याः | नदीभ्याम् | नदीभ्यः |
| षष्ठी | नद्याः | नद्योः | नदीनाम् |
| सप्तमी | नद्याम् | नद्योः | नदीषु |

## (९) इकारान्त मति शब्द

| | | | |
|---|---|---|---|
| प्रथमा | मतिः | मती | मतयः |
| संबोधन | मते | मती | मतयः |
| द्वितीया | मतिम् | मती | मतीः |
| तृतीया | मत्या | मतिभ्याम् | मतिभिः |
| चतुर्थी | मत्यै, मतये | मतिभ्याम् | मतिभ्यः |
| पञ्चमी | मत्याः, मतेः | मतिभ्याम् | मतिभ्यः |
| षष्ठी | मत्याः, मतेः | मत्योः | मतीनाम् |
| सप्तमी | मत्याम्, मतौ | मत्योः | मतिषु |

## सर्वनाम शब्द

### (क) नरजातीय (पुंलिङ्ग)

### (१०) तद्=वह

| | | | |
|---|---|---|---|
| प्रथमा | सः | तौ | ते |
| द्वितीया | तम् | तौ | तान् |
| तृतीया | तेन | ताभ्याम् | तैः |
| चतुर्थी | तस्मै | ताभ्याम् | तेभ्यः |
| पञ्चमी | तस्मात् | ताभ्याम् | तेभ्यः |
| षष्ठी | तस्य | तयोः | तेषाम् |
| सप्तमी | तस्मिन् | तयोः | तेषु |

### (११) यद्=जो

| | | | |
|---|---|---|---|
| प्रथमा | यः | यौ | ये |
| द्वितीया | यम् | यौ | यान् |
| तृतीया | येन | याभ्याम् | यैः |

इत्यादि तद् समान

### (१२) किम्=कौन

| | | | |
|---|---|---|---|
| प्रथमा | कः | कौ | के |
| द्वितीया | कम् | कौ | कान् |
| तृतीया | केन | काभ्याम् | कैः |

इत्यादि तद् के समान

## (ख) नारीजातीय (स्त्रीलिङ्ग)

### (१३) तद् = वह

| | | | |
|---|---|---|---|
| प्रथमा | सा | ते | ताः |
| द्वितीया | ताम् | ते | ताः |
| तृतीया | तया | ताभ्याम् | ताभिः |
| चतुर्थी | तस्यै | ताभ्याम् | ताभ्यः |
| पञ्चमी | तस्याः | ताभ्याम् | ताभ्यः |
| षष्ठी | तस्याः | तयोः | तासाम् |
| सप्तमी | तस्याम् | तयोः | तासु |

### (१४) यद् = जो

| | | | |
|---|---|---|---|
| प्रथमा | या | ये | याः |
| द्वितीया | याम् | ये | याः |
| तृतीया | यया | याभ्याम् | याभिः |

इत्यादि तद् के समान

### (१५) किम् = कौन

| | | | |
|---|---|---|---|
| प्रथमा | का | के | काः |
| द्वितीया | काम् | के | काः |
| तृतीया | कया | काभ्याम् | काभिः |

इत्यादि तद् के समान

## (ग) नान्यतरजातीय

### (१६) तद् = वह

| | | | |
|---|---|---|---|
| प्रथमा | तत् | ते | तानि |
| द्वितीया | तत् | ते | तानि |
| तृतीया | तेन | ताभ्याम् | तैः |

इत्यादि नरजातीय के समान

### (१७) यद् = जो

| | | | |
|---|---|---|---|
| प्रथमा | यत् | ये | यानि |
| द्वितीया | यत् | ये | यानि |
| तृतीया | येन | याभ्याम् | यैः |

इत्यादि नरजातीय के समान

### (१८) किम् = क्या

| | | | |
|---|---|---|---|
| प्रथमा | किम् | के | कानि |
| द्वितीया | किम् | के | कानि |
| तृतीया | केन | काभ्याम् | कैः |

इत्यादि नरजातीय के समान

### (१९) अस्मद् = हम

| | | | |
|---|---|---|---|
| प्रथमा | अहम् | आवाम् | वयम् |
| द्वितीया | माम्, मा | आवाम्, नौ | अस्मान्, नः |
| तृतीया | मया | आवाभ्याम् | अस्माभिः |
| चतुर्थी | मह्यम्, मे | आवाभ्याम्, नौ | अस्मभ्यम्, नः |
| पञ्चमी | मत् | आवाभ्याम् | अस्मत् |
| षष्ठी | मम, मे | आवयोः, नौ | अस्माकम्, नः |
| सप्तमी | मयि | आवयोः | अस्मासु |

### (२०) युष्मद् = तुम

| | | | |
|---|---|---|---|
| प्रथमा | त्वम् | युवाम् | यूयम् |
| द्वितीया | त्वाम्, त्वा | युवाम्, वाम् | युष्मान्, वः |
| तृतीया | त्वया | युवाभ्याम् | युष्माभिः |
| चतुर्थी | तुभ्यम्, ते | युवाभ्याम्, वाम् | युष्मभ्यम्, वः |
| पञ्चमी | त्वत् | युवाभ्याम् | युष्मत् |
| षष्ठी | तव, ते | युवयोः, वाम् | युष्माकम्, वः |
| सप्तमी | त्वयि | युवयोः | युष्मासु |

## ३. धातु-रूप

### (१) पठ्=पढ़ना

#### लट् (वर्तमान)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथम पुरुष | पठति | पठतः | पठन्ति |
| मध्यम पुरुष | पठसि | पठथः | पठथ |
| उत्तम पुरुष | पठामि | पठावः | पठामः |

#### लोट् (आज्ञा)

| | | | |
|---|---|---|---|
| प्रथम पुरुष | पठतु | पठताम् | पठन्तु |
| मध्यम पुरुष | पठ | पठतम् | पठत |
| उत्तम पुरुष | पठानि | पठाव | पठाम |

#### लिङ् (विधि)

| | | | |
|---|---|---|---|
| प्रथम पुरुष | पठेत् | पठेताम् | पठेयुः |
| मध्यम पुरुष | पठेः | पठेतम् | पठेत |
| उत्तम पुरुष | पठेयम् | पठेव | पठेम |

#### लङ् (भूत)

| | | | |
|---|---|---|---|
| प्रथम पुरुष | अपठत् | अपठताम् | अपठन् |
| मध्यम पुरुष | अपठः | अपठतम् | अपठत |
| उत्तम पुरुष | अपठम् | अपठाव | अपठाम |

#### लृट् (भविष्य)

| | | | |
|---|---|---|---|
| प्रथम पुरुष | पठिष्यति | पठिष्यतः | पठिष्यन्ति |
| मध्यम पुरुष | पठिष्यसि | पठिष्यथः | पठिष्यथ |
| उत्तम पुरुष | पठिष्यामि | पठिष्यावः | पठिष्यामः |

### (२) भू (भव्)=होना

#### लट् (वर्तमान)

| | | | |
|---|---|---|---|
| प्रथम पुरुष | भवति | भवतः | भवन्ति |
| मध्यम पुरुष | भवसि | भवथः | भवथ |
| उत्तम पुरुष | भवामि | भवावः | भवामः |

### लोट् (आज्ञा)

| | | | |
|---|---|---|---|
| प्रथम पुरुष | भवतु | भवताम् | भवन्तु |
| मध्यम पुरुष | भव | भवतम् | भवत |
| उत्तम पुरुष | भवानि | भवाव | भवाम |

### लिङ् (विधि)

| | | | |
|---|---|---|---|
| प्रथम पुरुष | भवेत् | भवेताम् | भवेयुः |
| मध्यम पुरुष | भवेः | भवेतम् | भवेत |
| उत्तम पुरुष | भवेयम् | भवेव | भवेम |

### लङ् (भूत)

| | | | |
|---|---|---|---|
| प्रथम पुरुष | अभवत् | अभवताम् | अभवन् |
| मध्यम पुरुष | अभवः | अभवतम् | अभवत |
| उत्तम पुरुष | अभवम् | अभवाव | अभवाम् |

### लृट् (भविष्य)

| | | | |
|---|---|---|---|
| प्रथम पुरुष | भविष्यति | भविष्यतः | भविष्यन्ति |
| मध्यम पुरुष | भविष्यसि | भविष्यथः | भविष्यथ |
| उत्तम पुरुष | भविष्यामि | भविष्यावः | भविष्यामः |

## (३) गम् (गच्छ्) = जाना

### लट्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | गच्छति | गच्छतः | गच्छन्ति |
| मध्यम पुरुष | गच्छसि | गच्छथः | गच्छथ |
| उत्तम पुरुष | गच्छामि | गच्छावः | गच्छामः |

### लोट्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | गच्छतु | गच्छताम् | गच्छन्तु |
| मध्यम पुरुष | गच्छ | गच्छतम् | गच्छत |
| उत्तम पुरुष | गच्छानि | गच्छाव | गच्छाम |

### लिङ्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | गच्छेत् | गच्छेताम् | गच्छेयुः |
| मध्यम पुरुष | गच्छेः | गच्छेतम् | गच्छेत |
| उत्तम पुरुष | गच्छेयम् | गच्छेव | गच्छेम |

लङ्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | अगच्छत् | अगच्छताम् | अगच्छन् |
| मध्यम पुरुष | अगच्छः | अगच्छतम् | अगच्छत |
| उत्तम पुरुष | अगछम् | अगच्छाव | अगच्छाम |

लृट्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | गमिष्यति | गमिष्यतः | गमिष्यन्ति |
| मध्यम पुरुष | गमिष्यसि | गमिष्यथः | गमिष्यथ |
| उत्तम पुरुष | गमिष्यामि | गमिष्यावः | गमिष्यामः |

(४) प्रच्छ् (पृच्छ) = पूछना

लट्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | पृच्छति | पृच्छतः | पृच्छन्ति |
| मध्यम पुरुष | पृच्छसि | पृच्छथः | पृच्छथ |
| उत्तम पुरुष | पृच्छामि | पृच्छावः | पृच्छामः |

लोट्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | पृच्छतु | पृच्छताम् | पृच्छन्तु |
| मध्यम पुरुष | पृच्छ | पृच्छतम् | पृच्छत |
| उत्तम पुरुष | पृच्छानि | पृच्छाव | पृच्छाम |

लिङ्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | पृच्छेत् | पृच्छेताम् | पृच्छेयुः |
| मध्यम पुरुष | पृच्छेः | पृच्छेतम् | पृच्छेत |
| उत्तम पुरुष | पृच्छेयम् | पृच्छेव | पृच्छेम |

लङ्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | अपृच्छत् | अपृच्छताम् | अपृच्छन् |
| मध्यम पुरुष | अपृच्छः | अपृच्छतम् | अपृच्छत |
| उत्तम पुरुष | अपृच्छम् | अपृच्छाव | अपृच्छाम |

लृट्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | प्रक्ष्यति | प्रक्ष्यतः | प्रक्ष्यन्ति |
| मध्यम पुरुष | प्रक्ष्यसि | प्रक्ष्यथः | प्रक्ष्यथ |
| उत्तम पुरुष | प्रक्ष्यामि | प्रक्ष्यावः | प्रक्ष्यामः |

## (५) पा (पिब्)=पीना

### लट्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | पिवति | पिबतः | पिबन्ति |
| मध्यम पुरुष | पिवसि | पिबथः | पिबथ |
| उत्तम पुरुष | पिबामि | पिबावः | पिवामः |

### लोट्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | पिबतु | पिबताम् | पिबन्तु |
| मध्यम पुरुष | पिब | पिबतम् | पिबत |
| उत्तम पुरुष | पिबानि | पिबाव | पिबाम |

### लिङ्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | पिबेत् | पिबेताम् | पिबेयुः |
| मध्यम पुरुष | पिबेः | पिबेतम् | पिबेत |
| उत्तम पुरुष | पिबेयम् | पिबेव | पिबेम |

### लङ्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | अपिवत् | अपिबताम् | अपिवन् |
| मध्यम पुरुष | अपिवः | अपिबतम् | अपिवत |
| उत्तम पुरुष | अपिवम् | अपिवाव | अपिबाम |

### लृट्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | पास्यति | पास्यतः | पास्यन्ति |
| मध्यम पुरुष | पास्यसि | पास्यथः | पास्यथ |
| उत्तम पुरुष | पास्यामि | पास्यावः | पास्यामः |

## (६) पा=पालना

### लट्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | पाति | पातः | पान्ति |
| मध्यम पुरुष | पासि | पाथः | पाथ |
| उत्तम पुरुष | पामि | पावः | पामः |

### लोट्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | पातु | पाताम् | पान्तु |
| मध्यम पुरुष | पाहि | पातम् | पात |
| उत्तम पुरुष | पानि | पावै | पाम |

### लिङ्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | शायात् | पायाताम् | पायुः |
| मध्यम पुरुष | पायाः | पायातम् | पायात |
| उत्तम पुरुष | पायाम् | पायाव | पायाम |

### लङ्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | अपात् | अपाताम् | अपान्, अपुः |
| मध्यम पुरुष | अपाः | अपातम् | अपात |
| उत्तम पुरुष | अपाम | अपाव | अपाम |

### लृट्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | पास्यति | पास्यतः | पास्यन्ति |
| मध्यम पुरुष | पास्यसि | पास्यथः | पास्यथ |
| उत्तम पुरुष | पास्यामि | पास्यावः | पास्यामः |

## (७) अस्=होना

### लट

| | | | |
|---|---|---|---|
| प्रथम पुरुष | अस्ति | स्तः | सन्ति |
| मध्यम पुरुष | असि | स्थः | स्थ |
| उत्तम पुरुष | अस्मि | स्वः | स्मः |

### लोट्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | अस्तु | स्ताम् | सन्तु |
| मध्यम पुरुष | एधि | स्तम् | स्त |
| उत्तम पुरुष | असानि | असाव | असाम |

### लिङ्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | स्यात् | स्याताम् | स्युः |
| मध्यम पुरुष | स्याः | स्यातम् | स्यात |
| उत्तम पुरुष | स्याम् | स्याव | स्याम |

लङ्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | आसीत् | आस्ताम् | आसन् |
| मध्यम पुरुष | आसीः | आस्तम् | आस्त |
| उत्तम पुरुष | आसम् | आस्व | आस्म |

लृट् में अस् के स्थान पर भू धातु के रूपों का प्रयोग किया जाता है (भविष्यति इत्यादि)।

## (८) कृ=करना

लट्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | करोति | कुरुतः | कुर्वन्ति |
| मध्यम पुरुष | करोषि | कुरुथः | कुरुथ |
| उत्तम पुरुष | करोमि | कुर्वः | कुर्मः |

लोट्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | करोतु | कुरुताम् | कुर्वन्तु |
| मध्यम पुरुष | कुरु | कुरुतम् | कुरुत |
| उत्तम पुरुष | करवाणि | करवाव | करवाम |

लिङ्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | कुर्यात् | कुर्याताम् | कुर्युः |
| मध्यम पुरुष | कुर्याः | कुर्यातम् | कुर्यात |
| उत्तम पुरुष | कुर्याम् | कुर्याव | कुर्याम |

लङ्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | अकरोत् | अकुरुताम् | अकुर्वन् |
| मध्यम पुरुष | अकरोः | अकुरुतम् | अकुरुत |
| उत्तम पुरुष | अकरोम् | अकुर्व | अकुर्म |

लृट्

| | | | |
|---|---|---|---|
| प्रथम पुरुष | करिष्यति | करिष्यतः | करिष्यन्ति |
| मध्यम पुरुष | करिष्यसि | करिष्यथः | करिष्यथ |
| उत्तम पुरुष | करिष्यामि | करिष्यावः | करिष्यामः |

## राष्ट्र-गान

जनगणमन अधिनायक जय हे !
भारत भाग्य विधाता ।
पंजाब, सिन्धु, गुजरात, मराठा,
द्राविड़, उत्कल, बंग
विन्ध्य, हिमाचल, यमुना, गंगा,
उच्छल जलधि-तरंग ।
तव शुभ नामे जागे
तव शुभ आशिष मांगे
गाहे तव जय-गाथा ।
जनगणमंगलदायक, जय हे
भारत भाग्य विधाता ।
जय हे, जय हे, जय हे,
जय जय जय, जय हे !!

मूल्य : ३८ पैसे